# *मन्त्रोत्कीलन विमोचन स्तोत्र*

अस्य श्री सर्व मन्त्रोत्कीलन मन्त्रस्य
मूलप्रकृति पुरुष ऋषि:
अनुष्टुप् जगती छन्द: श्री महाविद्या देवता निरंकारा मायाशक्ति:
ह्लीं ह्रीं बीजं क्रौं कीलकं
मम क्रियमाण संचित जन्म मरण सर्वमन्त्रोत्कीलन शाप विमोचन द्वारा धर्मार्थ काम मोक्षार्थे जपे विनियोग: ॥

न्यास: –

ह्लीं बीजोत्कीलनं अंगुष्ठाभ्यां नम: हृदयाय नम:
श्रीं मन्त्रोत्कीलनं तर्जनीभ्यां नम: शिरसे स्वाहा
क्लीं देवोत्कीलनं मध्यमाभ्यां नम: शिखायै वषट्
ऐं शक्त्यात्कीलनं अनामिकाभ्यां नम: कवचाय हुं
सौ: छन्दोत्कीलनं कनिष्ठिकाभ्यां नम: नेत्रत्रयाय वौषट्
क्रौं ऋष्योत्कीलनं करतल करपृष्ठाभ्यां नम: अस्त्राय फट्

ध्यानम् –

चिन्तयन्तीं चैतन्यरूपां ब्रह्मबीजां आनन्दकन्दां
सर्वान्तरांश चेतयन्तीं तारयन्तीं तां मन्त्रजालै: ।
चेतयन्तीं प्रकृतिपुरुष बीजं अखिलं संजीवनी
मन्त्र यन्त्रोत्कीलनी सर्वमन्त्रशाप विमोचयन्ती ॥

स्तोत्र –

अं आं ब्रह्म इं ईं स्व: रूपी एं ऐं उत्कीलनी विमुचंती ।
अं अ: प्रकाशयन्ती मम मनास्तु सर्वमन्त्र सिद्धि प्रदायिनी ॥ 1 ॥

यथा च वर्ण रूपाणि नाम कर्मात्मिका परा
त्वयैत् सृज्यते सर्व पाल्यते च तथैव च ॥ 2 ॥

सृष्टि स्थितिकरी चैव सर्वप्रळयकारिणी ।
निरंजनस्य देवस्य नाम कर्म विधायिनी ॥ 3 ॥

वद्धो विमुच्यते सर्व त्वयैव ब्रह्मरूपिणी ।
त्वं आद्यानन्त शक्तीनां प्रवाहो जायते तया ॥ 4 ॥

सस्मृता पूजिता अनन्ता योगिनां अपि सिद्धिदा ।
त्वया ब्रह्म विरिञ्चाद्या भ्रमन्ते निज कर्मणा ॥ 5 ॥

तथैव च महाविष्णुः सर्वदेव स्तुति ततः ।
सा तुष्टा सर्व मन्त्राणां मृतानां चेतनी सदा ॥ 6 ॥

मृतसञ्जीवनी शंभो प्रसादात् शुक्र सिद्धिदा ।
ब्रह्माण्डं चेतयन्ती विविध सुरगणान् प्रमोदैः प्रीताः ॥ 7 ॥

सन्दीपयन्ति निजगुण विततैः षड्गुणान् प्रेरयन्ती ।
वर्णान् देवान् जयन्ती दितिसुत दमनी साप्य हुंकार कार्त्री
क्षेत्री तस्यैव जाप्यं स्वर विततनुतां मोचयेच्छाय जातं ॥ 8 ॥

इदं महात्रिपुर सुन्दरी स्तोत्रं पठेत् भक्त्यास्तु यो नरः ।
सर्वान् कामान् अवाप्नोति सर्वसिद्धिः भवेत् ध्रुवम् ॥ 9 ॥

॥ इति शिव रहस्ये पञ्चरात्रे मध्यम संहितायां शिवशक्ति संवादे शैव वैष्णव शक्ति सौर गाणपत्य मन्त्रोत्कीलन विमोचन स्तोत्रं संपूर्णम् ॥